- तथा मन्त्रे च दृश्यते -

यथेयं पृथिवी मही तिष्ठन्ती गर्बमादधे - एवं त्वं गर्भमाधत्स्व दशमे मासि सूतवे।
इति.

मालिनीवृत्तमेतत् * ननमयययुतेयं मालिनी भोगिलोकैः ।

**इति रघुवंशमहाकाव्ये नन्दिनीवरप्रसादो नाम द्वितीयः सर्गः**

---

శ్రీః





– రా మో రా

శ్రీః

ఆనందదేవాయనివల్లభదేవవిరచితటీకాసహితః

# రఘువంశః

ద్వితీయః సర్గః

**नन्दिनीवरप्रसादो नाम द्वितीयः सर्गः**

**श्लो।। अथ प्रजानामधिपः प्रभाते - जायाप्रतिग्राहितगन्धमाल्याम्।**
**वनाय पीतप्रतिबद्धवत्सां - यशोधनो धेनुमृषेर्मुमोच।। १**

अनन्तरं राजा ऋषेर्गां काननायामुंचत् वनं नेतुं विपाशितवान् । क्रियार्थोपपदस्येत्यादिना चतुर्थी । जायया कर्त्र्या स्वीकारितं गन्धमाल्यं यया धेन्वा ताम् । जाययादापितं गन्धमाल्यं यस्या इति वा । धेनुरानुकूल्याच्छुभशंसित्वाच्चानुलेपनपुष्पे गृह्णाति ।राज्ञी पतिचोदिता ग्राहयतीति णिच् । पीतं पानं यस्यास्ति स पीतः । अर्श आदित्वादकारः । पूर्वं पीतवान्पश्चात्प्रतिबद्धो वत्सो यस्याः ।यशोधन इत्यनेनानुचितमपि गोपालकर्म शापशान्तये न दोषायेति सूचितम् । सर्गेऽत्रोपजातिवृत्तम् । १ ।

**श्लो।। तस्याः खुरन्यासपवित्रपांसु - मपांसुलानां धुरि कीर्तनीया।**
**मार्गं मनुष्येश्वरधर्मपत्नी - श्रुतेरिवार्थं स्मृतिरन्वगच्छत्।। २**

राज्ञी गोरध्वानं पश्चादव्रजत् । चरणनिक्षेपेण पूतारेणवो यत्र तम् । अमलीमसानां साध्वीनामग्रे गणनीया । यथा ऋषिप्रणीतं शास्त्रं वेदस्याभिधेयमनुगच्छति। वेदमूलत्वात्स्मृतेः ।२।

**श्लो।। निवर्त्य राजा दयितां दयालु - स्तां सौरभेयीं सुरभिर्यशोभिः।**
**पयोधरीभूतचतुस्समुद्रां - जुगोप गोरूपधरामिवोर्वीम् ।। ३**





राजा सुरभिदौहित्रीं नन्दिनीं ररक्ष । भार्यां निषिध्य । दयाशीलः । यशोभिः सुगन्धिः, आमोदितभुवनत्रयत्वात् । सितं सुरभि च यश इति महाकविसमाचारः । प्रथितो वा । उत्प्रेक्षयते - गोरूपधरां भूमिमिव स्तनात्मनापरिणताश्चत्वारोऽब्धयो यस्यास्ताम् । ३ ।

**श्लो।। व्रताय तेनानुचरेण धेनो - र्न्यषेधि शेषोऽप्यनुयायिवर्गः।**
**न चान्यतस्तस्य शरीररक्षा - स्ववीर्यगुप्ता हि मनोः प्रसूतिः।४**

राज्ञा न केवलं राज्ञी यावच्छिष्टोऽप्यनुचरसमूहो न्यवर्ति । नगरस्थापितसेनापेक्षयात्र शेषत्वम् । व्रतनिमित्तं नन्दिन्याः पश्चाद्यायिना । अपरेभ्यो नरेभ्यो देहपालनं राज्ञो महावीरस्य न भवति, तेन हेतुना न्यवर्ति । यतो विवस्वत्सुतस्य सन्ततिरात्मपराक्रमरक्षिता भवति । ४ ।

**श्लो।। आस्वादवद्भिः कबलैस्तृणानां - कण्डूयनैर्दंशनिवारणैश्च।**
**अव्याहतस्वैरगतैश्च तस्या - स्सम्राट् समाराधनतत्परोऽभूत्।। ५**

स सार्वभौमो राजा गोः सम्यगाराधननिष्ठोऽभूत् । सास्वादैर्मृष्टैः शष्पाणां ग्रासैः कषणैः क्षुद्रजन्तूनां वनमक्षिकाणां निषेधैः अनिषिद्धैः स्वेच्छागमनैश्च ।५।

**श्लो।। स्थितः स्थितामुच्चलितः प्रयातां - निषेदुषीमासनबन्धधीरः।**
**जलाभिलाषी जलमाददानां - छायेव तां भूपतिरन्वगच्छत् ।।६**

भूमिप्रभुर्नन्दिनीमनुययौ । उत्थितामुत्थितः प्रस्थितां प्रस्थितः । स्थितस्तूत्थितो भवतीति पृथगुपादानम् । उपविष्टामुपवेशनस्य रचनायां निश्चलः । अम्भो गृह्णानामम्ब्विच्छन् ।छायावदेकरूपः ।

**श्लो।। सन्यस्तचिह्नामपि राज्यलक्ष्मीं - तेजोविशेषानुमितां दधानः।**
**आसीदनाविष्कृतदानराजि - रन्तर्मदावस्थ इव द्विपेन्द्रः।। ७**

स राजा भद्राख्यमहेभतुल्योऽभूत् । अपास्तच्छत्रचामरादिलक्षणामपि नृपश्रियं धारयन् । यत ऊर्जस्वितयोहिताम् । अस्फुटितगण्डत्वादप्रकटीकृता मदलेखा येन । अत एव हृद्गतो मदविकारो यस्य । यदुक्तम्

भद्रो मन्दो मृगश्चाथ संकीर्णश्चेति जातयः।
चतस्रः करिणां तत्र भद्रोऽन्तर्मद एव यः ।

**श्लो॥ लताप्रतानोद्ग्रथितैः स केशै - रधिज्यधन्वा विचचार दावम्।**
**रक्षापदेशान्मुनिहोमधेनो - र्वन्यान्विनेष्यन्निव दुष्टसत्त्वान् ॥ ८**

स राजा वनमचरत् । लतानां विस्तारैः सूक्ष्मलताभिरूर्ध्वीकृत्य बद्धैः कचैरुपलक्षितः । अधिरूढा ज्या यत्र तदधिज्यमारोपितगुणं धनुर्यस्य सः । विकृतप्राणिनः खड्गव्याघ्रादिकान्विनीतान्कर्तुमिव विनये स्थापयितुमिव । नन्दिन्याः पालनव्याजात् । हेतौ शतृ । ८ ।

**श्लो॥ विसृष्टपार्श्वानुचरस्य तस्य - पार्श्वाद्रुमाः पाशभृता समस्य ।**
**उदीरयामासुरिवोन्मदाना - मालोकशब्दं वयसां विरावैः ॥ ९**

राज्ञः पार्श्वस्था वृक्षाः पश्यतु देव इत्यलोकनार्थं शब्दं पक्षिणां रुतैरुच्चारयामासुरिव । यतो विसर्जितातिनिकटानुचरस्य । वनस्पतीनामधिपतिना वरुणेन तुल्यस्य, असतां नियमनात्। पार्श्वशब्दोऽतिनैकट्यप्रतिपादनार्थः ।९।

**श्लो॥ मरुत्प्रयुक्ताश्च मरुत्सखाभं - तमर्च्यमारादभिवर्तमानम् ।**
**अवाकिरन्बाललताः प्रसूनै - राचारलाजैरिव पौरकन्याः ॥१०**

बालवीरुधो नृपं पुष्पैः सिषिचुर्निर्भरीचक्रुः । वातेन प्रेरिता विधूनिताः । अग्निवद्दीप्तिर्यस्य , आभाति वा । निकटे तिष्ठन्तम्। आचारकार्यार्थं भृष्टव्रीहिभिर्नागरिकाः कुमार्यो यथा । पुरप्रवेशे हि राजा नागरिकाभि र्लाजैरवकीर्यत इत्याचारः ।





**श्लो॥ धनुर्भृतोऽप्यस्य दयार्द्रभाव - माख्यातमन्तःकरणैर्विशङ्कैः।**
**विलोकयन्त्यो वपुरापुरक्ष्णां - प्रकामविस्तारफलं हरिण्यः॥११**

मृग्यो नेत्राणामत्यर्थं तानफलं लेभिरे । दृष्टद्रष्टव्यत्वात् । पूर्वं हि शून्यारण्यालोकनात्तासां निष्फलोऽभवन्नेत्रप्रथिमा । सचापस्यापि राज्ञो देहं पश्यन्तः । मनोबुद्ध्यादिभिरन्तरिन्द्रियैर्विगतभयैः कृपया सरसं चित्तं यस्य तद्विश्वासकार्युक्तम् । यदुक्तम् ।

विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा ।

**श्लो॥ स कीचकैर्मारुतपूर्णरन्ध्रैः - कूजद्भिरापादितवंशकृत्यम्।**
**शुश्राव कुंजेषु यशः स्वमुच्चै - रुद्गीयमानं वनदेवताभिः॥ १२**

स लतापिहितोदरस्थानेष्वात्मीयं यशः काननदेवताभिरुदात्तं तारं वा शब्द्यमानमाकर्णयत् । सुषिरवेणुभिःस्वनद्भिः शब्दायमानैर्वायुपूरितविवरैः सम्पादितं वेणुकार्यं यस्य तत् । गेये हि वंशध्वनिना भाव्यम् ।१२।

**श्लो॥ पृक्तस्तुषारैर्वननिर्झराणा - मनोकहाकम्पनपुष्पगन्धी ।**
**तमातपक्लान्तमनातपत्र - माचारपूतं पवनः सिषेवे ॥ १३**

राजानं वायुर्भेजे । काननप्रपातपानीयप्रवाहाणां शीकरैः मिश्रितः । वृक्षाणामाधूननेन कुसुमगन्धवान् । आतपखिन्नं छत्ररहितं शास्त्रित व्यवहारपवित्रम् ।१३।

**श्लो॥ शशाम वृष्ट्यापि विना दवाग्नि - रासीद्विशेषात्फलपुष्पवृद्धिः ।**
**ऊनं न सत्त्वेष्वधिको बबाधे- तस्मिन्वनं गोप्तरि गाहमाने ॥१४**

रक्षितारं राजनि वनं श्रयति परिभ्रमति वर्षणादृतेऽपि वनानलो निववृते । अतिशयं विधाय फलकुसुमवृद्धिरभूत् । विशेषादिति विधायेति ल्यब्लोपे कर्मणि पंचमी । मृगमयूरादिष्वबलं सत्त्वं सिंहादिर्नापीडयत् । अत्र राज्ञो महानुभावता कारणम् । १४।

**श्लो।। संचारपूतानि दिगन्तराणि - कृत्वा दिनान्ते निलयाय गन्तुम् ।**
**प्रचक्रमे पल्लवरागताम्रा - प्रभा पतङ्गस्य मुनेश्च धेनुः ।। १५**

ऋषेर्गौः रवेर्दीप्तिश्च निजं स्थानं गन्तुं प्रारेभे । गत्यर्थेति चतुर्थी । प्रक्रमणपवित्राणि ककुम्मध्यानि विधाय । किसलयरागवल्लोहिता धेनुः प्रभा च।

**श्लो।। तां देवतापित्रतिथिक्रियार्थ - मन्वग्ययौ मध्यमलोकपालः ।**
**बभूव सा तेन सतां मतेन - श्रद्धेव साक्षाद्विधिनोपपन्ना।।१६**

पृथ्वीपतिर्धेनुं पश्चादगच्छत् । देवपित्रागन्तूनामितिकर्तव्यतायै पूजायै इति यावत् । पंचयज्ञानुष्ठानार्थम् । सा च राज्ञा साधुपूजितेन हेतुना श्रुतिस्मृतिविहितेन मार्गेण संयुता मूर्तिमती चित्तशुद्धिरिवासीत् । १६ ।

**श्लो।। स पल्वलोत्तीर्णवराहयूथा -न्यावासवृक्षोन्मुखबर्हिणानि ।**
**ययौ मृगाध्यासितशाद्वलानि-श्यामायमानानि वनानि पश्यन्।।१७**

राजा काननान्यालोकयन् जगाम । नड्वलेभ्य उत्थितः सूकरसमूहो यत्र तनि । स्थानतरूणामभिमुखा मयूरा यत्र तानि । हरिणाश्रिततृणानि नीलीभावीनि सायन्तनातपोत्पन्नपरभागानीति यावत्।नडशादाड्वलजिति द्विर्वलज्ग्रहणमदेशाभिधानेऽपि ड् वलजस्तीति ज्ञापनार्थम् । तेन तृणेऽपि शाद्वलं साधु । १७ ।

**श्लो।। आपीनभारोद्वहनप्रयत्ना - द्गृष्टिर्गुरुत्वादुरसो नरेन्द्रः ।**
**उभावलंचक्रतुरंचिताभ्यां - तपोवनावृत्तिपथं गताभ्याम् ।। १८**

गृष्टिरेकवारप्रसूता गौः नृपश्चाश्रमप्रत्यागमनमार्गं भूषयांबभूवतुः । रम्याभ्यां मन्थराभ्यां चङ्क्रमणाभ्याम् । ऊधोधारणप्रयासाद्धेनोर्गतिर्मन्थरा महत्त्वात् च वक्षसो राज्ञः ।१८।



**श्लो।। वसिष्टधेनोरनुयायिनं त - मावर्तमानं वनिता वनान्तात् ।**
**पपौ निमेषालसपक्ष्मपङ्क्ति - रुपोषिताभ्यामिव लोचनाभ्याम्।।१९**

सुदक्षिणा नृपं नेत्राभ्यां पपाविव पपौ साकाङ्क्षं ददर्श । निमीलने दर्शनान्तरायो मा भुदिति मन्थरे अक्षिलोमश्रेणी यस्याः सा । अत एवौत्सुक्यात् कृतोपवासाभ्यामिव । उपोषिता हि पिवतितराम् पानं च संकोचमन्थरत्वाद्विज्ञायते । नन्दिन्या अनुव्रजन्तं काननप्रान्तादायान्तम्। १९ ।

**श्लो।। पुरस्कृता वर्त्मनि पार्थिवेन - प्रत्युद्गता पार्थिवधर्मपत्न्या ।**
**तदन्तरे सा विरराज धेनु - र्दिनक्षपामध्यगतेव सन्ध्या ।। २०**

नन्दिनी दम्पत्योर्मध्ये शुशुभे । अग्रे कृता राज्ञा पथि, कृताभ्युद्गमा राज्ञ्या, स्वयं च कपिला। दिवसरात्र्यन्तरस्था सन्ध्या यथा शोभते ।।२० ।

**श्लो।। प्रदक्षिणीकृत्य पयस्विनीं तां - सुदक्षिणा साक्षतपात्रहस्ता ।**
**प्रणम्य चानर्च विशालमस्याः - शृङ्गान्तरं द्वारमिवात्मसिद्धेः।।२१**

राज्ञी तां गां परीत्य प्रणम्य च धेनोर्विषाणमध्यं यवकुसुमगन्धादिभिरपूजयत् । विकटं स्वसिद्धेः पुत्रोत्पत्तिलक्षणाया द्वारमिव । सह यवपूर्णपात्रेण वर्तते तादृशो हस्तो यस्याः सा । यवास्त्वर्घ्यार्थं भोजनाय च । बहु प्रशस्तं पयो यस्यास्ताम् । तद्दुग्धपानेन दशवर्षसहस्रायुरित्यागमात् । प्रशंसायां विनिः । २१ ।

**श्लो।। वत्सोत्सुकापि स्तिमिता सपर्यां - प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।**
**भक्त्योपपन्नेषु हि तद्विधानां - प्रसादचिह्नानि पुरःफलानि।।२२**

दम्पती अतो जहृषतुः यतो धेनुस्तर्णकसोत्कंठापि निश्चला सती पूजामाददे । यस्माद्वरदानसमर्थानां भक्त्याश्रितेषु यः प्रसादः स एव लक्षणं येषां तादृशि अग्रफलानि भवन्ति । आराधनीयस्य हि प्रसन्नतामालोक्य भावि फलमनुमीयते । २२ ।

**श्लो।। गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीपः।**
**दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोत्सन्नरिपुर्निषण्णाम् ।। २३**

राजा गां भूय एव सिषेवे । दोहनसमाप्तौ वसिष्ठस्य सभार्यस्य चरणावुपसङ्गृह्योपमृद्य संवाह्य सन्ध्याभवं कर्म च निर्वर्त्य । -बाहुनष्टशत्रुः - । उपविष्टाम् । स्वयं दुग्ध इति दोग्ध्री ताम् । २३ ।

**श्लो।। तामन्तिकन्यस्तबलिप्रदीपा - मन्वास्य गोप्ता गृहिणीसहायः।**
**क्रमेण सुप्तामनु संविवेश - सुप्तोत्थितां प्रातरनूदतिष्टत् ।।२४**

रक्षिता राजा गां काण्डूयनादिभिः सेवित्वा परिपाट्या निद्रितां तस्याः पश्चात्सुष्वाप निद्रितोत्थितां प्रभाते तस्याः पश्चादुत्तस्थौ । निकटे दत्तोऽर्चायै प्रदीपो यस्याः । २४ ।

**श्लो।। इत्थं व्रतं पालयतः प्रजार्थं - समं महिष्या महनीयकीर्तेः ।**
**सप्त व्यतीयुस्त्रिगुणानि तस्य - दिनान्यमित्रोद्धरणोचितस्य ।।२५**

राज्ञो महादेव्या सहैवंविधं व्रतं कुर्वतस्त्रिगुणानि सप्ताहानि ययुः । एकविंशतिः । पूज्यकीर्तेः । आन्तराणां हर्षमानादीनां शत्रूणामुन्मूलने समेवतस्य । बाह्यानां भुजोत्सन्नरिपुरित्युक्तम् । दीनोद्धरणोचितस्येति पाठे भावि गोरुद्धरणं सूचितम् । २५ ।

**श्लो।। अन्येद्युरात्मानुचरस्य भावं - जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तनिरूढशष्पं - गौरीगुरोर्गह्वरमाविवेश ।। २६**

अन्यस्मिन्नहनि नन्दिनी हिमवतो गहनमाविशत् । भागीरथीनिर्झरप्रान्ते बद्धमूलानि संजातानि नूतनशष्पाणि यत्र तत् । स्वस्यानुयायिनः आत्मैवानुचरो यस्येति वा । राज्ञोऽभिप्रायं भक्तिं वा ज्ञातुमिच्छन्ती बुभुत्सुः । २६ ।





**श्लो।। सा दुष्प्रधर्षा मनसापि हिंस्रै - रित्यद्रिशोभाप्रहितेक्षणेन ।**
**अलक्षिताभ्युत्पतनो नृपेण - प्रसह्य सिंहः किल तां चकर्ष।।२७**

धेनुं हर्यक्ष आचक्राम बलात् । यतो दुष्टप्राणिभिः खड्गसिंहाद्यैश्चित्तेनापि दुरभिभवेत्यतो हेतोर्हिमवच्छोभायां निक्षिप्तनेत्रेण, न तु प्रमाद्यता अदृष्टोपनिपातः । किलेत्यलीके , तस्य कृतकसिंहत्वात् । २७ ।

**श्लो।। तदीयमाक्रन्दितमार्तसाधो - र्गुहानिबद्धप्रतिशब्ददीर्घम् ।**
**रश्मिष्विवादाय नगेन्द्रदत्तां - निवर्तयामास नृपस्य दृष्टिम्।।२८**

गोः संबन्धी चीत्कारो राज्ञोऽक्षिणी हिमवद्दत्ते निषिषेध । आपन्नानां त्रातुः । दरीरचितया प्रतिश्रुत्कया विस्तीर्णम् । प्रग्रहेषु वल्गासु गृहीत्वा यथा कश्चिद्धुर्यान्निवर्तयति तद्वत् । २८ ।

**श्लो।। स पाटलायां गवि तस्थिवांसं - धनुर्धरः केसरिणं ददर्श ।**
**अधित्यकायामिव धातुमय्यां - रोध्रद्रुमं सानुमतः प्रफुल्लम्।।२९**

राजा ताम्रायां नन्दिन्यां सिंहमुपविष्टमालोकयत् । चापधृत् । गिर्यग्रभूमौ गैरिकादिमय्यां शैलस्य रोध्राख्यं प्रशस्यं रोध्रशब्दवाच्यं वा वृक्षं विकचं यथा ।२९ ।

**श्लो।। ततो मृगेन्द्रस्य मृगेन्द्रगामी - वधाय वध्यस्य शरं शरण्यः ।**
**जाताभिषङ्गो नृपतिर्निषङ्गा - दुद्धर्तुमैच्छत् प्रसभोद्धृतारिः।। ३०**

अनन्तरं राजा बाणं तूणादाक्रष्टुमियेष । घातयोग्यस्य सिंहस्य घाताय । सिंहवत्सपराक्रमं गच्छति । शरणसाधुस्त्राता । उत्पन्नपराभवः । बलात्कारेण न तु च्छलेनोत्खाता : शत्रवो येन सः । अभिषङ्गो मन्युरिति केचित् ।३०।

**श्लो।। वामेतरस्तस्य करः प्रहर्तु - र्नखप्रभारूषितकङ्कपत्रे ।**
**सक्ताङ्गुलिः सायकपुङ्ख एव - चित्रार्पितारम्भ इवावतस्थे।। ३१**

राज्ञो दक्षिणो हस्तोऽवातिष्ठत् । प्रजिहीर्षतः कररुहदीप्तिभिराच्छुरिताः कंकाख्यस्य शकुनेः पक्षा यत्र तस्मिन् शरमूल एव लग्नतर्जनीकः । अतश्चाकिंचित्करत्वा दालेख्यन्यस्तसंस्थान इव ।३१।

**श्लो॥ बाहुप्रतिस्तम्भविवृद्धमन्यु - रभ्यर्णमागस्कृतमस्पृशद्भिः ।**
**राजा स्वतेजोभिरदह्यतान्त - र्भोगीव मन्त्रप्रतिबद्धवीर्यः ॥ ३२**

निजतेजोभी राजा हृदये दग्धः । भुजसंरोधेन तीव्रकोपः - निकटस्थ मप्यपराधिनं सिंहाख्यमबाधमानैः । सर्पो यथा मन्त्रनियमितशक्तिर्विषाग्निना हृदये दह्यते । ३२ ।

**श्लो॥ तमार्यगृह्यं निगृहीतधेनु - र्मनुष्यवाचा मनुवंशकेतुम्।**
**विस्मापयन् विस्मयमात्मसिद्धौ - भूपालसिंहं निजगाद सिंहः॥३३**

पंचाननो राजश्रेष्ठमब्रवीत् । साधुपक्षपातिनम् । आक्रान्तगौः । नरवाण्या नृपं साश्चर्यं कुर्वन् । मनुकुले केतुं ध्वजमिव प्रकाशकम् । स्वप्रभावे विगतदर्पम् । ३४ ।

**श्लो॥ अलं महीपाल! तव श्रमेण - प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।**
**न पादपोन्मूलनशक्ति रंहः - शिलोच्चये मूर्छति मारुतस्य ॥ ३४**

हे भूपाल! तव शरक्षेपजनितेन प्रयासेनालं तूष्णीम् । शरान्मा क्षैप्सीः । क्षोभं मा कृथा इत्यर्थः । यस्मात्क्षिप्तमप्यस्त्रमस्मत्तो निष्फलं भवेत् । दिव्यशक्तित्वात् । यतो वायो रयोऽद्रौ न स्फायते । वृक्षोद्धरण एव सामर्थ्यं यस्य तत् । ३४ ।

**श्लो॥ कैलासगौरं वृषमारुरुक्षोः - पादार्पणानुग्रहपूतपृष्टम्।**
**अवैहि मां किङ्करमष्टमूर्तेः - कुम्भोदरं नाम निकुम्भमित्रम्॥३५**

शिवस्य मां भूत्यमवगच्छ । कैलासवद्धवलमुक्षाणमाशेढुकामस्य चरणस्य





पृष्ठे विन्यास एव प्रसादस्तेन पवित्रपृष्ठम् । कुंभोदराभिधानम् । नाम प्राकाश्ये । निकुम्भाख्यस्य गणस्य प्रख्यातत्वात्तन्मैत्र्या प्रशंसा । ३५ ।

**श्लो॥ अमुं पुरः पश्यसि देवदारुं - पुत्रीकृतोऽयं वृषभध्वजेन।**
**यो हेमकुम्भस्तननिस्सृतानां - स्कन्दस्य मातुः पयसां रसज्ञः॥३६**

इममग्रे देवदारुवृक्षं पश्यसीति काक्वा पश्यस्येवेत्यर्थः । शिवेनायं वृक्षः सुतीकृतः । यो देवदारुः कुमारस्य जनन्याः पार्वत्याः सुवर्णस्य घटादेव कुचान्निर्गतानां जलानामास्वादवित् । पयः क्षीरं च । सुतो हि तद्रसज्ञः ।३६।

**श्लो॥ कण्डूयमानेन कटं कदाचि - द्वन्यद्विपेनोन्मथिता त्वगस्य ।**
**अथैनमद्रेस्तनया शुशोच - सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७**

वनसाधुहस्तिना देवदारोर्वल्को जातु भग्नस्त्रोटितः । गण्डं कषता । अनन्तरं पार्वत्येनं देवदारुं पर्यदेवयत् । स्कन्दमिव दैत्यशरैः स्पृष्टं व्याप्तं व्रणितमित्यर्थः । ३७ ।

**श्लो॥ तदा प्रभृत्येव मतङ्गजानां - त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।**
**व्यापारितश्शूलभृता विधाय - सिंहत्वमङ्कागतसत्त्ववृत्ति ॥ ३८**

तदेति विभक्तिप्रतिरूपको निपातः । तत इत्यर्थः । तत आरभ्यैवेश्वरेणाहं वन्यद्विपानां भीत्यर्थमस्मिन्पर्वतगहने नियुक्तः ।निकटप्राप्तैः प्राणिभिः प्राणयात्रा यत्र सिंहत्वे तादृशं हर्यक्षभावं कृत्वा। यमेव प्राणिनमभिमुखमीक्षसे तमेव प्राश्नीया इत्यर्थः । ३८ ।

**श्लो॥ तस्यालमेषा क्षुधितस्य तृप्त्यै - प्रदिष्टकाला परमेश्वरेण ।**
**उपस्थिता शोणितपारणा मे - सुरद्विषश्चान्द्रमसी सुधेव ॥३९**

एषा गौस्तस्य मम बुभुक्षितस्य तर्पणाय पर्याप्ता । रुधिरेण शरीरयात्रा यस्यास्तादृश्युपनता । विधिनोपदिष्टा निरूपिता मरणवेला यस्याः सा ।

दैवप्रेरिता गतासुत्वान्मद्गोचरमागतेत्यर्थः । यथा राहोरिन्द्वमृतम् । तस्य भोजनकालः पौर्णमासी प्रदिष्टः । एतेन चोपमानेन सुस्वादुत्वममोक्षश्च सूच्यते । ३९ ।

**श्लो॥ स त्वं निवर्तस्व विहाय लज्जां - गुरोर्भवान् दर्शितशिष्यभक्तिः ।**
**शस्त्रेण रक्ष्यं यदशक्यरक्षं - न तद्यशः शस्त्रभृतां क्षिणोति ॥४०**

स त्वं कृतप्रयत्नोऽसि व्रज । आयुष्मान्वसिष्ठस्य दर्शितान्तेवासिसेवा येनैवंविधो भवति । रक्ष्यमरक्षित्वा कीदृषी मम गुरुभक्तिरित्याह । यद्रक्षितुं दत्तं वस्तु शस्त्रेणासाध्या रक्षा यस्य तत्तथाविधम् । तद्वीराणां यशो न हिनस्ति, अशक्यवस्तुनि वाच्यताभावात् । ४० ।

**श्लो॥ इति प्रगल्भं पुरुषाधिराजो - मृगाधिराजस्य वचो निशम्य ।**
**प्रत्याहतास्त्रो गिरिशप्रभावा - दात्मन्यवज्ञां शिथिलीचकार॥ ४१**

इत्थं धृष्टं वचनं सिंहस्याकर्ण्य राजा स्वे अशक्तिकृतामवमानना मल्पीचकार । यतो हरानुभावात्स्तब्धायुधः । दैवतानि च दुर्जयानि । ४१ ।

**श्लो॥ प्रत्यब्रवीच्चैनमिषुप्रयोगे - तत्पूर्वसङ्गे वितथप्रयत्नः ।**
**जडीकृतस्त्र्यम्बकवीक्षितेन - वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२**

राजा सिंहं प्रत्यवद च्च । तदेव प्रथमं रोधो यस्य तस्मिंशरक्षेपे निष्फलप्रयासः । यथा वज्रहस्तः शक्रो वज्रं मोक्तुकामो हरदर्शनेन स्तब्धीकतः । यदुक्तम् ।

श्लो। बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तंभयत्प्रभु रिति महाभारते।

प्रत्याहेत्यादिपाठान्तरे राजा सिंहं प्रत्यवदच्च । अस्त्रक्षेपनिष्फलः । सलज्जत्वान्नादपृथगभावं दीनस्वरत्वमाप्तः । खण्डितवर्षकालशब्देन शरन्मेघेन साम्यं प्राप्तः । ४२ ।



**श्लो॥ संरुद्धचेष्टस्य मृगेन्द्र! कामं - हास्यं वचस्तद्यदहं विवक्षुः ।**
**अन्तर्गतं प्राणभृतां तु वेद-सर्वं भवान् भावमतोऽभिधास्ये ॥४३**

हे सिंहाहं यद्वचनं वक्तुकामस्तत्सत्यं हासास्पदं मम स्तम्भितभुजव्यापारस्य, किं तु हृदयगमभिप्रायं प्राणिनां यतो भवान्वेत्त्यतः कारणाद्वक्ष्येऽहम् । यदहं तवाभिदधे तत् सत्यमवगच्छेरिति वाक्यार्थः ।४३।

**श्लो॥ मान्यस्स मे स्थावरजङ्गमानां - सर्गस्थितिप्रत्यवहारहेतुः।**
**गुरोरपीदं धनमाहिताग्ने - र्नश्यत् पुरस्तादनुपेक्षणीयम्॥ ४४**

चराचराणां सृष्टे रक्षायाः प्रलयस्य च निमित्तं स भगवान्यतो माननीयः, पूज्यः अतस्तद्वचनमङ्गागतसत्त्ववृत्तीत्येवंरूपमवश्यानुष्ठेयमित्यर्थः । तथा सेवितवह्नेर्वसिष्ठस्य चैतद्गोलक्षणं धनं तद्धोमसम्पादनयोग्यमग्रे विनाशं गच्छदपरित्याज्यम् । होमे चाज्यकारणाद्गौरेव मुख्यमङ्गम् । ४४ ।

**श्लो॥ स त्वं मदीयेन शरीरवृत्तिं - देहेन निर्वर्तयितुं प्रसीद ।**
**दिनावसानोत्सुकबालवत्सा - विमुच्यतां धेनुरियं महर्षेः ॥४५**

स त्वं मम शरीरेण देहयात्रां सम्पादयितुं प्रसादं कुरु । एषा दिवसान्तोत्कण्ठिततर्णका वसिष्ठस्य गौस्त्यज्यताम् । वत्सत्वादेव बालत्वे लब्धे बालग्रहणमतिसूक्ष्मत्वप्रतिपादनार्थम् । बालश्च मातरं विना म्रियत एव । ४५

**श्लो॥ अथान्धकारं गिरिकन्दराणां - दंष्ट्रामयूखैश्शकलानि कुर्वन् ।**
**भूयस्स भूतेश्वरपार्श्ववर्ती - किंचिद्विहस्यार्थपतिं बभाषे ॥ ४६**

अनन्तरं स भर्गानुचरः सिंहो नृपं पुनरवदत् । अल्पं प्रहस्य । अद्रिगुहानां तमो दन्तरश्मिभिः खण्डानि विदधत् । ४६ ।

**श्लो॥ एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।**
**अल्पस्य हेतोर्बहु हातुमिच्छन्-विचारमुग्धः प्रतिभासि मे त्वम्॥४७**

यतोऽद्वितीयं छत्रं यत्र तथाविधं भूमेः पतित्वं तथा नवं यौवनं रमणीयं सुरूपमेतच्छरीरं चातः स्तोकस्य गोमात्रस्य कारणाद्भूरि एकच्छत्रप्रभुत्वादि त्यक्तुकामस्त्वं मम विवेकशून्यः प्रतिभाससे । प्राज्ञो हि तुच्छं त्यजति, बहु जिघृक्षते । ४७ ।

**श्लो।। भूतानुकम्पा तव चेदियं गौ - रेका भवेत् स्वस्तिमती त्वदन्ते ।**
**जीवन् पुनः शश्वदुपप्लवेभ्यः-प्रजाः प्रजानाथ! पितेव पासि।।४८**

अथ यदि ते प्राणिदया देहदाननिदानं तद्भवद्विनाशे एषैका गौः श्रेयोयुक्ता स्यात् प्रजापालक । कृतजीवरक्षस्तु त्वं सदा बाधेभ्यः प्रजा रक्षसि , पिता यथा पुत्रान्पाति । ४८ ।

**श्लो।। अथैकधेनोरपराधचण्डा - द्गुरोः कृषानुप्रतिमाद्बिभेषि ।**
**शक्योऽस्य मन्युर्भवता विनेतुं-गाः कोटिशः स्पर्शयता घटोध्नीः।। ४९**

यद्यग्नितुल्याद्गुरोर्वसिष्ठात्त्रस्यसि तन्मा भैषीः । त्वया गुरोः कोपो निवारयितुं साध्यः । कथम् । एकस्या गोरागो व्यापात्तिलक्षणं ततः **प्रतिवस्तुतो** गाः कोटिं कोटिं ददता । घट इव स्तनमण्डलं यासां ताः एका धेनुर्यस्येति केचित् । ४९ ।

**श्लो।। तद्रक्ष कल्याणपरम्पराणां - भोक्तारमूर्जस्वलमात्मदेहम् ।**
**महीतलस्पर्शनमात्रभिन्न - मृद्धं हि राज्यं पदमैन्द्रमाहुः ।। ५०**

यत एवं तस्मात्साम्राज्यादीनां कुशलसमूहानामुपभोगकारिणं तेजोयुक्तं स्वशरीरं मा हासीः । यस्माद्बुद्धिमन्तो जनाः स्फीतं राज्यं शक्रसम्बन्धि स्थानं स्वर्गं ब्रुवन्ति . भूपृष्ठस्पर्शमात्रविशिष्टम् । भूस्पर्शमात्रमेव भेदः, अन्यत्सर्वं तु समम् । ५० ।

**श्लो।। एतावदुक्त्वा विरते मृगेन्द्रे - प्रतिस्वनेनास्य गुहागतेन ।**
**शिलोच्चयोऽपि क्षितिपालमुच्चैः - प्रीत्या तमेवार्थमभाषतेव।। ५१**



एतत्परिमाणं कथयित्वा तूष्णींभूते सिंहे नगोऽपि भूपालं सिंहोक्तमेव वस्तु तारं जगादेव । प्रतिशब्देन शैलस्य दरीगतेन । ५१ ।

**श्लो।। तथा समर्थां गिरमूचिवांसं - प्रत्याह देवानुचरं दिलीपः ।**
**धेन्वा तदध्यासनकातराक्ष्या - निरीक्ष्यमाणः सुतरां दयालुः।।५२**

राजा हरकिंकरं सिंहं प्रतीपमुवाच । पूर्वोक्तेन प्रकारेण सम्बद्धां वाचमुक्तवन्तम् सिंहाक्रमणेन चंचले नेत्रे यस्यास्तया गवा दृश्यमानः । सुष्ठु कृपावान् ।५२।

**श्लो।। क्षतात् किल त्रायत इत्युदग्रः - क्षत्त्रस्य शब्दो भुवनेषु रूढः ।**
**राज्येन किं तद्विपरीतवृत्तेः - प्राणैरुपक्रोशमलीमसैर्वा ।। ५३**

उपद्रवाद्बाधातो रक्षतीत्यनया निरुक्तप्रक्रियया क्षत्रियस्य वाचकस्त्रिभुवने रूढं गतः । न तु तैलपायिकावदर्थरहितः । महानुन्नतः । अतश्चार्तत्राणरहितस्य मे राज्येन निन्दामलिनैश्च प्राणैः किं प्रयोजनम् यदि गां न त्राये तत्किं मम राज्यजीविताभ्यां प्रयोजनमिति वाक्यार्थः । अतश्च ऋद्धं हीत्यादि जीवन्नित्यादि च यदुक्तवानसि तदयुक्तमिति भावः । ५३ ।

**श्लो।। कथं च शक्योऽनुनयो महर्षे - र्विश्राणनादन्यपयस्विनीनाम् ।**
**इमामनूनां सुरभेरवैहि - रुद्रौजसा तु प्रहृतं त्वयास्याम् ।। ५४**

मया केन प्रकारेण च वसिष्ठस्य सकोपचित्तप्रसादनं साध्यमपरधेनूनां दानात् । त्वमेतां सुरभेर्दाक्षायण्याः सदृशीं विद्धि । अनेन महाप्रभावत्वमुक्तम् । विश्वामित्रो हि राज्यमेतत्कृते दत्त्वा नैनां प्रापेति श्रुतिः । त्वया पुनर्नन्दिन्यां हरप्रभावेनाक्रान्तम् । ५४।

**श्लो।। सेयं स्वदेहार्पणनिष्क्रयेण - न्याय्यं मया मोचयितुं भवत्तः ।**
**न पारणा स्याद्विहता तवैवं - भवेदलुप्तश्च मुनेः क्रियार्थः।। ५५**

मया सैषा गौरात्मशरीरमेव मूल्यं तेन त्वत्सकाशात्त्याजयितुमुपपन्नम् । पूर्वं सामान्योपक्रमेऽनन्तरं विशेषाभिधानान्नपुंसकतेति भिन्नलिङ्गयोरपि सामानाधिकरण्यम् । यथा वरं कूपशतद्वापी, तथा विषवृक्षोऽपि संवर्ध्येत्यादिकाः प्रयोगाः ।एवं कृते तव प्राणयात्रा कृतविघ्ना न भवेत्, ऋषेरितिकर्तव्यतैव प्रयोजनं चाच्छिन्नं स्यात् । ५५ ।

**श्लो।। भवानपीदं परवानवैति - महान् हि यत्नस्तव देवदारौ ।**
**स्थातुं नियोक्तुर्यदि शक्यमग्रे - विनाश्य रक्ष्यं स्वयमक्षतेन।। ५६**

न च ममैवात्र ग्रहः यावत् त्वमप्येतद्वेत्सि रक्षणीयं वस्तु विनाश्यात्मना अखण्डितेन सता प्रभोः पुरः स्थातुं यदि साध्यम् । काक्वा न शक्यमिति प्रतीयते । कथं जानासि यदहमपि वेद्मीत्यह । यस्माद्देवदारुरक्षणे ते उदग्रः प्रयासः । यतस्त्वं परायत्तः । ५६ ।

**श्लो किमप्यहिंस्यस्तव चेन्मतोऽहं - यशश्शरीरे भव मे दयालुः ।**
**एकान्तविध्वंसिषु मद्विधानां - पिण्डेष्वनास्था खलु भौतिकेषु।।५७**

यद्यहं केनापि हेतुनावध्यस्तवाभिप्रेतस्तद्यशोमये देहे कृपावानेधि । अनुनये लोट् । निश्चयेन नश्वरेषु मादृशां देहेषु पृथ्व्यादिपंचमहाभूतारब्धेष्वनादरोऽस्ति । यशःशरीरं तु कल्पस्थायि । मयि जीवति गवि हतायां यशो नश्वरं भवेत् । ५७ ।

**श्लो।। सम्बन्धमाभाषणपूर्वमाहुः - जातस्स नौ सङ्गतयोर्वनान्ते ।**
**तद्भूतनाथानुग! नार्हसि त्वं - सम्बन्धिनो मे प्रणयं विहन्तुम्।।५८**

हे शिवानुचर! तस्मात्त्वं प्रार्थनाभङ्गं मम विद्यमानसम्बन्धस्य कर्तुं न योग्योऽसि । कस्ते मया सह सम्बन्ध इत्याह । यस्मादृषयः प्रत्युत्तरदानप्रथमं सम्बन्धं वदन्ति । येन सह वाङ्गेलनं कृतं स सखोच्यते । स च सम्बन्ध आवयोः काननप्रान्ते सङ्घटितयोः सम्पन्नः । ५८ ।





**श्लो।. तथेति गामुक्तवते दिलीपः - सद्यः प्रतिष्टम्भविमुक्तबाहुः ।**
**स न्यस्तशस्त्रं हरये स्वदेह - मुपानयत् पिण्डमिवामिषस्य।।५९**

राजा सिंहाय तत्क्षणात् -संरोधविसृष्टभुजः- त्यक्तायुधं निजशरीरं ददौ । तथेत्यभ्युपगमे । एवमस्तु देहि देहमिति वाचं जल्पितवते । यथा मांसस्य गोलकम् । ५९ ।

**श्लो।। तस्मिन् क्षणे पालयितुः प्रजाना - मुत्पश्यतः सिंहनिपातमुग्रम्।**
**अवाङ्मुखस्योपरि पुष्पवृष्टिः - पपात विद्याधरहस्तमुक्ता ।। ६०**

तस्मिन्नवसरे राज्ञ उपरिष्टाद्विद्याधरकरत्यक्तं पुष्पवर्षमपतत् । क्रूरं मृगेन्द्रसम्पातमुत्प्रेक्षमाणस्य सम्भावयतोऽधोमुखस्य । अवाङ्मुखत्वमत्र देहक्षेपेणेत्थंस्थानकोत्पत्तेः , न तु सिंहसम्पातभीत्या । न हि सत्त्ववतामेवंविधानां भयानि हृदये प्रवेशं लभन्ते । ६० ।

**श्लो।। उत्तिष्ट वत्सेत्यमृतायमानं - वचो निशम्योत्थितमुत्थितस्सन्।**
**ददर्श राजा जननीमिव स्वां - गामग्रतः प्रस्रविणीं न सिंहम्।।६१**

राजा नन्दिनीं पुर ऐक्षत, न केसरिणम् । पुत्रोत्तिष्ठेति सुधातुल्यं वचनमुत्पन्नमाकर्ण्योत्थितो वर्तमानः । स्नेहवशात्पयो मुंचन्तीम् । मातरं यथा ।६१ ।

**श्लो।। तं विस्मितं धेनुरुवाच साधो! -मायां मयोद्भाव्य परीक्षितोऽसि ।**
**ऋषिप्रभावान्मयि नान्तकोऽपि-प्रभुः प्रहर्तुं किमुतान्यहिंस्राः।।६२**

राजानमिन्द्रजालदर्शनसविस्मयं नन्दिनी जगाद । हे ऋजो मया त्वं विचारितः ।इन्द्रजालमुत्पाद्य । यस्माद्वसिष्ठमाहात्म्याद्यमोऽपि बाधितुं मयि न समर्थः । किं पुनः सिंहाद्या बाधितु समर्थाः । ६२ ।

**षो।। भक्त्या गुरौ मय्यनुकम्पया च - प्रीतास्मि ते पुत्र! वरं वृणीष्व ।**
**न केवलानां पयसां प्रसूति - मवैहि मां कामदुघा प्रसन्नाम्।।६३**

हे सुताहं तव तुष्टा वसिष्ठे भक्त्या मयि दयया च । अभिलषितमर्थयस्व । त्वं मां कृतानुग्रहां केवलानां दुग्धानां दायिनीं न, वांछितप्रदां जानीहि ।६३।

**श्लो।। ततस्समानीय स मानितार्थी - हस्तौ स्वहस्तार्जितवीरशब्दः।**
**वंशस्य कर्तारमनन्तकीर्तिं - सुदक्षिणायां तनयं ययाचे।। ६४**

अनन्तरं राजा सुदक्षिणायां पुत्रमचकमत । अंजलिं बद्ध्वा पूजितप्रणयी । निजकरेणार्जितो वीरशब्दो येन सः । कुलस्य विधातारं बहुलयशसम् । ६४

**श्लो।। सन्तानकामाय तथेति कामं - राज्ञे प्रतिश्रुत्य पयस्विनी सा ।**
**दुग्ध्वा पयः पत्रपुटे मदीयं - पुत्रोपयुङ्क्ष्वेति तमादिदेश ।। ६५**

सा क्षीरवती तं नृपं शशास । भवत्वेवंविधः पुत्रस्ते इतीप्सितं नृपायाङ्गीकृत्य । मम दुग्धं पर्णपात्रे स्रावयित्वा सुत पिबेति । ६५ ।

**श्लो।। वत्सस्य होमार्थविधेश्च शेषं - ऋषेरनुज्ञामधिगम्य मातः! ।**
**ऊधस्यमिच्छामि तवोपभोक्तुं - षष्ठांशमुर्व्या इव रक्षितायाः।।६६**

**श्लो।। इत्थं क्षितीशेन वसिष्ठधेनु - र्विज्ञापिता प्रीततरा बभूव ।**
**तदन्विता हैमवतात् च कुक्षेः - प्रत्याययावाश्रममश्रमैव।। ६७**

अनेन प्रकारेण नन्दिनी राज्ञा कृतविज्ञप्तिरतितुष्टाभूत् । राज्ञानुगता च हिमालयसम्बन्धिनः कुहरादाश्रमं प्रत्यागच्छत् । अखिन्नैव । दूरगमनत्सिंहायासाच्च श्रमशङ्का । किं विज्ञापितेत्याह । वत्सस्य पीतशेषं होमप्रयोजनविधानाच्च यदवशिष्यते तत्त्वदीयं क्षीरं पातुमिच्छामि । गुरोराज्ञां



प्राप्य, न तु स्वेच्छया । षष्ठभागमिव भूमेः । सम्यग्वृत्तो हि राजा धर्मर्थयोः षष्ठभागभागीति वृद्धाः । वत्सशब्दस्तत्पाने वर्तते । ६६-६७ ।

**श्लो।। तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।**
**मुखप्रसादानुमितं प्रियायै - शशंस वाचा पुनरुक्तयैव ।। ६८**

राजाधिराजो वसिष्ठाय धेनोरनुग्रहं व्याख्याय भार्यायै पुनःकथितयैव गिराकथयत् । यतो निर्मलशशिवदनत्वाद्वक्त्रप्रसन्नत्वेनैव तया लिङ्गाज्ज्ञातम् । अत एव वाचः पौनरुक्त्यं गतार्थत्वात् । ६८ ।

**श्लो।। स नन्दिनीस्तन्यमनिन्दितात्मा - सद्वत्सलो वत्सनिपीतशेषम्।**
**पपौ वसिष्ठेन कृताभ्यनुज्ञः - शुद्धं यशो भूय इवावितृप्तः।।६९**

राजा गोक्षीरमपिवत् । साधूनां स्निग्धः, संश्चासौ वत्सलश्च वा । अनवद्य आत्मा यस्य, स्वभावादनुज्ञातत्वाच्च । वत्सपीताच्छेषं निर्मलं लम्पटः पुनरपि कीर्तिमिवापात् । आदौ हि तेन राज्ञा यशः पीतम् ।यशोऽपि श्वेतम् । ६९ ।

**श्लो।। प्रातर्यथोक्तव्रतपारणान्ते - प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।**
**तौ दम्पती स्वां प्रति राजधानीं - प्रस्थापयामास वशी वसिष्ठः।।७०**

गुरुस्तौ भार्यापती निजां नगरीं प्रति व्यसर्जयत् । प्रभाते यथोक्तव्रतस्य परिसमाप्तेरवसाने । समाप्तेरवयववतीत्वादन्तग्रहणम् । शरीरयात्रासम्पत्तिर्वात्र पारणा । अभिनिर्याणप्रयोजनमाशीरनुवाकमुच्चार्य । जितेन्द्रियः । ७० ।

**श्लो।। प्रदक्षिणीकृत्य हुतं हुताश - मनन्तरं भर्तुररुन्धतीं च ।**
**धेनुं सवत्सां च नृपः प्रतस्थे - सन्मङ्गलोदग्रतरानुभावः ।। ७१**

राजा प्रययौ । स्वस्तिकामेन महर्षिणा कृतहोमममग्निं परीत्य वसिष्ठस्य पश्चात्तद्भार्यां च । तं पूर्वमेवेत्यर्थः । नन्दिनीं वत्सयुतां च । प्रशस्तपक्षिरु -

तादिशकुनैरत्युन्नतो मतिनिश्चयो यस्य सः - ।७१ ।

**श्लो।। श्रोत्राभिरामध्वनिना रथेन - स धर्मपत्नीसहितः सहिष्णुः ।**
**ययावनुद्घातसुखेन मार्गं - स्वेनेव पूर्णेन मनोरथेन ।। ७२**

राजा रथेन पन्थानमगात् । सभार्यः । क्षमी सोढव्रतखेदो वा । अभिरम्यते ऽनेनेत्यभिरामः । कर्णसुखदं सङ्क्रीडनं यस्य, स्निग्धगम्भीरत्वात् । अविद्यमानं स्खलनं यस्य । अत एव सुखदः । यथात्मीयेन सम्पूर्णेन पुत्रलाभलक्षणेन वांछितेन ययावेवं रथेन । सोऽपि पुत्रस्ते इते भूयादिति श्रोत्राभिरामोऽस्खलनसुखश्च । रथस्य मनोरथरूपणादुत्प्रेक्षा, उपमा वा ।७२।

**श्लो।। तमाहितोत्कण्ठमदर्शनेन - प्रजाः प्रजार्थव्रतकर्षिताङ्गम् ।**
**नेत्रैः पपुस्तृप्तिमनाप्नुवद्भि - र्नवोदयं नाथमिवौषधीनाम् ।।७३**

लोका राजानं नयनैस्तृप्तिमप्रप्तैः साकाङ्क्षमैक्षन्त । अप्रेक्षणेन जनितलौल्यम् । सन्ततये नियमेन दुर्बलावयवम् । अत एव प्रतिपच्चन्द्रमिव । सो ऽप्येवंविध एव ।७३।

**श्लो।। पुरन्दरश्रीः पुरमुत्पताकं - प्रविश्य पौरैरभिनन्द्यमानः ।**
**भुजे भुजङ्गेन्द्रसमानसारे - भूयः स भूमेर्धुरमाससंज ।। ७४**

राजा नगरं प्रविश्य पुनर्बाहौ भुवो भारं कार्यभारमारोपयन्व्यवीविशत् । राज्यं चकारेत्यर्थः । उत्क्षिप्तवैजयन्तीकम् । इन्द्रसमा लक्ष्मीर्यस्य । पुरे भवैर्नागरैः स्तूयमानः । शेषेण समानं बलं यस्य तस्मिन् । ७४ ।

**श्लो।। अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः**
**सुरसरिदिव तेजो वह्निनिष्ट्यूतमैशम् ।**
**नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी**
**गुरुभिरभिनिविष्टं लोकपालानुभावैः ।। ७५**





**अथ कतिपयदिनान्तरं सुदक्षिणा गर्भं दध्रे अन्तर्वत्न्यभूत्। दिलीपकुलस्य भवनायाविच्छेदाय। अत्रिमुनेर्नेत्रजं प्रकाशं चंद्रं यथाकाशो धत्ते, यथा वाग्निना वान्तं शाम्भवं रेतो गंगाधत्त। पूर्वं हि शार्वं शुक्रं गौर्यात्यक्तमग्निरपिवत्। तेनाप्यशक्त्या वान्तं गंगाधारयत्। ततः कुमारो जातः। महद्भिर्महा प्रभावैरि न्द्रादीनामंशैः सन्निधानरूपैः कृतप्रवेशम् ।। ७५**

इति रघुवंशमहाकाव्ये सटीके नन्दिनीवरप्रसादो नाम द्वितीयः सर्गः

----

అనుబంధము -1

రఘువంశః ద్వితీయఃసర్గః

## శ్లోకానుక్రమణికా

1. అథ నయనసముత్థం - 75
2. అథ ప్రజానాం - 1
3. అథాన్ధకారం - 46
4. అథైకధేనోః - 49
5. అన్యేద్యు - 26
6. అముం పురః - 36
7. అలం మహీపాల! - 34
8. ఆపీనభారో - 18
9. ఆస్వాదవద్భిః - 5
10. ఇతిప్రగల్భం - 41
11. ఇత్థం - 67
12. ఇత్థం వ్రతం - 25
13. ఉత్తిష్ఠ వత్స! - 61
14. ఏకాతపత్రం - 47
15. ఏతావదుక్త్వా - 51
16. కణ్డూయమానేన - 37
17. కథం ను - 54
18. కిమపి - 57
19. కైలాసగౌరం - 35
20. క్షతాత్ - 53
21. గురోః సదారస్య - 23
22. తం విస్మితం - 62
23. తతస్సమానీయ - 64
24. తతోమృగేన్ద్రస్య - 30
25. తథేతి గాం - 59
26. తదాప్రభృత్యేవ - 38
27. తదీయమాక్రన్దితం - 28
28. తద్రక్ష - 50
29. తమార్యగృహ్యం - 33
30. తమాహితౌత్సుక్యం - 73
31. తస్మిన్ క్షణే - 60
32. తస్యాః ఖుర -2
33. తస్యాః ప్రసన్నేన్దు - 68
34. తస్యాలమేషా - 39
35. తామన్తిక - 24
36. తాం దేవతా - 16
37. ధనుర్భృతో - 11
38. నివర్త్య - 3
39. నిశమ్య - 52
40. పురన్దరశ్రీః - 74
41. పురస్కృతా - 20
42. పృక్తస్తుషారైః - 13
43. ప్రత్యబ్రవీత్ - 42
44. ప్రదక్షిణీకృత్య - 21,71
45. ప్రాతః - 70
46. బాహుప్రతిష్టమ్భ - 32
47. భక్త్యా గురౌ - 63
48. భవానపీదం -56
49. భూతానుకమ్పా - 48
50. మరుత్ప్రయుక్తాః - 10
51. మాన్యస్స మే - 44
52. లతాప్రతానో - 8
53. వత్సస్య - 66
54. వత్సోత్సుకా - 22
55. వసిష్ఠధేనో - 19
56. వామేతర - 31
57. విసృష్ట - 9
58. వ్రతాయ - 4
59. శశామ - 14
60. శ్రోత్రాభి - 72
61. సకీచకైః - 12
62. సంచారపూతాని - 15
63. స త్వం - 40
64. స త్వం మదీయేన - 45
65. స నన్దినీస్తన్య - 69
66. సన్తానకామాయ - 65
67. స న్యస్తచిహ్నాం - 7
68. స పల్వల - 17
69. స పాటలాయాం - 29
70. సమ్బన్ధం - 58
71. సంరుద్ధ - 43
72. సా దుష్ప్రధర్షా - 27
73. సేయం -55
74. స్థితః స్థితాం -6

---





అనుబంధము -2

రఘువంశః - ద్వితీయః సర్గః

## పదసూచీ (పదమ్ - శ్లోకభాగః)

1. అంకః - 38
2. అంతకః - 62
3. అను - 24
4. అనుకంపా - 48
5. అన్వక్ - 16
6. అరుంధతీ - 71
7. అవాక్ - 60
8. ఆగస్ - 32
9. ఆతపత్రమ్ - 47
10. ఆరాత్ - 10
11. ఆహిత - 44
12. ఊనమ్ - 14
13. ఊర్జస్వలః - 50
14. ఔత్సుక్యమ్ - 7
15. ఏకాన్తమ్ - 73
16. కటః - 37
17. కాతరః - 52
18. కామమ్ - 49, 65
19.కుంజః - 12
20. గిరిశః - 41
21. గృష్టిః-18
22. చాంద్రమసీ - 31
23. ఛాయా - 6
24. జాయా - 1
25. తతః - 30
26. తనయః - 64
27. తుల్యః - 35
28. తుషారః - 13
29. దయతా - 3
30. దావః - 8
31. ధేనుః - 4
32. నిషణ్ణా - 23
33. ను - 54
34. నృపః - 27
35. న్యాయ్యా - 55
36. పరవాన్ - 56
37. పతంగః - 15
38. పాంశులా - 2
39. పారణా - 55
40. పార్థివః - 20
41. ప్రణయః - 58
42. ప్రదక్షిణీకృత్య - 21
43. ప్రఫుల్ల - 29
44. ప్రసన్నః - 63
45. ప్రసాదః - 68
46. భుజగః - 74
47. భుజంగః - 74
48. భూయః - 46
49. మన్యుః - 49
50. మలీమసమ్- 53
51. మహిషీ - 25
52. రంహః - 30
53. రశ్మిః - 28
54. రాజిః - 7
55. రాజ్ఞీ - 75
56. వజ్రమ్ - 42
57. వనితా - 19
58. వత్సః - 45, 61
59. వయస్ - 9
60. వశీ - 70
61. వసిష్ఠ - 67
62. విద్యాధరః - 60
63. సమ్రాట్ - 5
64. సాయకః - 31
65. సింహః - 33
66. స్కందః - 36
67. స్తన్యమ్ - 69
68. శస్త్రమ్ - 40
69. శాద్వలః -17
70. శిలోచ్చయః - 51
71. షష్ఠాంశః - 66
72. హరిః - 59
73. హరిణీ - 11
74. హోమః - 26

---

అనుబంధము -3

రఘువంశః - ద్వితీయః సర్గః

## లోకోక్తులు

1. భక్త్యోపపన్నేషు హి తద్విధానాం ప్రసాదచిహ్నాని పురః +ఫలాని - 2-22
2. న పాదపోన్మూలనశక్తి రంహః శిలోచ్చయే మూర్ఛతి మారుతస్య - 2-34



అనుబంధం-4

## ఉపయుక్తగ్రన్థసూచీ


1) మేఘదూతమ్ - మృణాళినీ వ్యాఖ్య
2) కుమారసమ్భవమ్ - పుంసవనీ వ్యాఖ్య
3) కుమారసమ్భవనమ్ - ప్రకాశికా మరియు వివరణం వ్యాఖ్య
4) అష్టాధ్యాయీ సూత్రపాఠః - ప్రహ్లాద టిప్పణి - కృష్ణదాస్ అకాడమి - 2001.
5) Practical Sanskrit - English Dictionary - 3 Volumes - Apte.
6) హలాయుధ కోశః - ఉత్తరప్రదేశ్ హిందీసంస్థాన్ - 1993.
7) ఉణాదికోశః - యుధిష్ఠరమీమాంసకః - 2000
8) సంస్కృతధాతుసాగరతరణిః - మద్రాస్ పబ్లికేషన్.
9) అభిదానచిన్తామణిః - చౌఖాంబా - 1996
10) అమరకోశమ్ - గురుబాలప్రబోధికా - వావిళ్ళ ప్రచురణ.
11) అవ్యయకోశః - The Sanskrit Educational Society, Madras - 1971
12) సంకేతపదకోశము - డా॥ రవ్వా శ్రీహరి - పతంజలి పబ్లికేషన్స్ - 2002.
13) బృహద్ధాతుకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
14) బృహచ్ఛబ్దకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
15) సంస్కృతవ్యాకరణమ్ - శ్రీ ఆర్.వి.ఆర్.కె. శాస్త్రి - కృష్ణానందమఠం - 1997
16) పుష్పబాణవిలాసః - వేదం వారి ప్రచురణ - 1931
17) అమరుకావ్యమ్ - వేదం వారి ప్రచురణ - 1931
18) మనుస్మృతి - పరిమళ ప్రచురణ - 2004
19) తర్కశాస్త్రం - వ్యాఖ్యాత - డా॥ రామానుజాచార్య - 1991
20) భర్తృహరి సుభాషితములు - వావిళ్ళ ప్రచురణ.
21) యోగదర్శనమ్ - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
22) శ్రీమద్రామాయణం - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
23) ఋతుసంహారః - మృణాళినీ వ్యాఖ్య - రామోరా - 2004
24) రఘువంశమ్ - వావిళ్ళ ప్రచురణ - 1926.
25) రఘువంశమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2004.
26) కుమారసంభవమ్ - వేదం వారి ప్రచురణ - 1943
27) కుమారసంభవమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2003.
28) ఘటకర్పరకావ్యమ్ - మఞ్జరీ వ్యాఖ్య - రామోరా, దుర్గానంద - 2003.

29) శిశుపాలవధమ్ - కృష్ణదాస్ అకాడమి - 1998
30) మాఘకావ్యమ్ - వావిళ్ళ ప్రచురణ - 1967
31) కావ్యాదర్శః - బాలానందినీవ్యాఖ్యా
32) కావ్యాదర్శః - చౌఖాంబా - 2001
33) ఏకావళి - మాధవీయ వివృతి - అభినవభారతి ప్రచురణ - గుంటూరు.
34) కావ్యప్రకాశము - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
35) ప్రతారుద్రీయయశోభూషణమ్ - వావిళ్ళ ప్రచురణ - 1965
36) సాహిత్యదర్పణమ్ - కృష్ణదాస్ అకాడమి - 2005
37) దశరూపకమ్ - చౌఖాంబా - 1987
38) ధ్వన్యాలోకమ్ - బాలానందినీవ్యాఖ్యా - శ్రీజయలక్ష్మీ పబ్లికేషన్స్ - 1998
39) రఘువంశమ్ - నన్దార్గికర్
40) భగవద్గీత - గీతాప్రెస్.
41) శ్రీమద్భాగవత మహాపురాణమ్ - గీతాప్రెస్.
42) నైషధీయచరితమ్ - నారాయణీయమ్ వ్యాఖ్యా.
43) నైషధీయచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి ప్రచురణ.
44) A Classical Dictionary of Hindu Mythology and Religion - J. Dowson.
45) The Kiratarjuneeyam of Bharavi - M.R. Kale. - Banarsidas Pub.
46) దశకుమారచరితమ్-1 - వేదంవారి ప్రచురణ - 1994
47) సూర్యశతకము - బాలప్రభ - డా॥ తాళ్ళూరి - 1990
48) ప్రసన్నరాఘవమ్ - చౌఖాంబా - 1972
49) సిద్ధాంతకౌముదీ - నిర్ణయ్‌సాగర్ ప్రెస్ - 1929.
50) అష్టాధ్యాయీ పదానుక్రమకోశః - పరిమళ పబ్లికేషన్స్ - 1996.
51) గీతగోవిందకావ్యము - వావిళ్ళ ప్రచురణ - 1993
52) కిరాతార్జునీయమ్-1 - శ్రీ పరమేశ్వర పబ్లికేషన్స్.
53) కిరాతార్జునీయమ్-3 - సంస్కృతభాషా ప్రచార సమితి.
54) భామినీవిలాసః - సురభారతీ ప్రకాశమ్ - 2000
55) విక్రమోర్వశీయమ్ - సంస్కృత అకాడమి - ఓ.యు., హైదరాబాద్.
56) విక్రమోర్వశీయమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
57) మాళవికాగ్నిమిత్రమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
58) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002





59) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ నోరి భోగీశ్వరశర్మ - 2002
60) నాగానందమ్ - శిరోమణివ్యాఖ్య - తెలుగు విశ్వవిద్యాలయం - 2001.
61) ఉత్తరరామచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1965
62) ఉత్తరరామచరితమ్ - చౌఖాంబా - 2003
63) మాలతీమాధవమ్ - యం.ఆర్. కాలే - బనారసీదాస్ - 1997.
64) మృచ్ఛకటికమ్ - డా॥ బేతవోలు రామబ్రహ్మం - 2005.
65) ముద్రారాక్షసమ్ - ఆర్.డి. కర్మార్కర్ - చౌఖాంబా.
66) ముద్రారాక్షసమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి,
67) వేణీసంహారమ్ - డా॥ బేతవోలు రామబ్రహ్మం-తెలుగు విశ్వవిద్యాలయం - 1988
68) కావ్యాలంకారః - భామహవిరచితః - బా.వ్యా.-సంస్కృతభాషాప్రచారసమితి- 2004
69) సరస్వతీకంఠాభరణమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1984
70) నీతిసారః - కామందకః
71) పాణినివిరచితాఅష్టాధ్యాయీ - 2 భాగములు - చౌఖాంబా - 2004.
72) పంచతంత్రం-1 & 2 - సంస్కృతభాషాప్రచారసమితి - 1988.
73) హితోపదేశమ్ - సంస్కృతభాషాప్రచారసమితి
74) శ్రీ విష్ణుసహస్రనామస్తోత్రమ్ - ఆంధ్రానువాదము - శ్రీ న.చ.రఘునాథాచార్యులు.
75) బృహత్‌స్తోత్రరత్నాకరః - వావిళ్ళ ప్రచురణ.
76) సర్వశబ్దః - ఏ.యి.యస్. పబ్లికేషన్ - 2004
77) శబ్దసాగర్ - చౌఖాంబా - 2004
78) రసగంగాధరమ్ - (అనువాదము) ధరణికోట వెంకటసుబ్బయ్య.
79) లఘుసిద్ధాంతకౌముదీ - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
80) అమరుకకావ్యమ్ - మనసిజవ్యాఖ్య - సాధన గ్రంథ మండలి, తెనాలి.
81) కిరాతార్జునీయమ్ - వావిళ్ళ ప్రచురణ.
82) రఘువంశమ్ - కర్మార్కర్
83) చమత్కారచంద్రిక - ఆంధ్రవిశ్వవిద్యాలయ ప్రచురణ, వాల్టేర్ - 1969
84) శ్రీమహాభారతమ్ - వావిళ్ళ ప్రతి - 1931
85) శ్రీకాలిదాసకవితావైభవము
86) శబ్దకల్పద్రుమః।
87) రఘువంశః (I - VI) Spain Publications
88) రఘువంశమ్ - S. Pandit, Principal, D.C.

- - -